॥ ताराशतनामस्तोत्रम् बृहन्नीलतन्त्रार्गतम् ॥

श्रीदेव्युवाच ।

सर्वं संसूचितं देव नाम्नां शतं महेश्वर ।
यत्नैः शतैर्महादेव मयि नात्र प्रकाशितम् ॥ २०-१॥

पठित्वा परमेशान हठात् सिद्ध्यति साधकः ।
नाम्नां शतं महादेव कथयस्व समासतः ॥ २०-२॥

श्रीभैरव उवाच ।

शृणु देवि प्रवक्ष्यामि भक्तानां हितकारकम् ।
यज्ज्ञात्वा साधकाः सर्वे जीवन्मुक्तिमुपागताः ॥ २०-३॥

कृतार्थास्ते हि विस्तीर्णा यान्ति देवीपुरे स्वयम् ।
नाम्नां शतं प्रवक्ष्यामि जपात् स(अ)र्वज्ञदायकम् ॥ २०-४॥

नाम्नां सहस्रं संत्यज्य नाम्नां शतं पठेत् सुधीः ।
कलौ नास्ति महेशानि कलौ नान्या गतिर्भवेत् ॥ २०-५॥

शृणु साध्वि वरारोहे शतं नाम्नां पुरातनम् ।
सर्वसिद्धिकरं पुंसां साधकानां सुखप्रदम् ॥ २०-६॥

तारिणी तारसंयोगा महातारस्वरूपिणी ।
तारकप्राणहर्त्री च तारानन्दस्वरूपिणी ॥ २०-७॥

महानीला महेशानी महानीलसरस्वती ।
उग्रतारा सती साध्वी भवानी भवमोचिनी ॥ २०-८॥

महाशङ्खरता भीमा शाङ्करी शङ्करप्रिया ।
महादानरता चण्डी चण्डासुरविनाशिनी ॥ २०-९॥

चन्द्रवद्रूपवदना चारुचन्द्रमहोज्ज्वला ।
एकजटा कुरङ्गाक्षी वरदाभयदायिनी ॥ २०-१०॥

महाकाली महादेवी गुह्यकाली वरप्रदा ।
महाकालरता साध्वी महैश्वर्यप्रदायिनी ॥ २०-११॥

मुक्तिदा स्वर्गदा सौम्या सौम्यरूपा सुरारिहा ।
शठविज्ञा महानादा कमला बगलामुखी ॥ २०-१२॥

महामुक्तिप्रदा काली कालरात्रिस्वरूपिणी ।
सरस्वती सरिच्छ्रेष्ठा स्वर्गङ्गा स्वर्गवासिनी ॥ २०-१३॥

हिमालयसुता कन्या कन्यारूपविलासिनी ।
शवोपरिसमासीना मुण्डमालाविभूषिता ॥ २०-१४॥

दिगम्बरा पतिरता विपरीतरतातुरा ।
रजस्वला रजःप्रीता स्वयम्भूकुसुमप्रिया ॥ २०-१५॥

स्वयम्भूकुसुमप्राणा स्वयम्भूकुसुमोत्सुका ।
शिवप्राणा शिवरता शिवदात्री शिवासना ॥ २०-१६॥

अट्टहासा घोररूपा नित्यानन्दस्वरूपिणी ।
मेघवर्णा किशोरी च युवतीस्तनकुङ्कुमा ॥ २०-१७॥

खर्वा खर्वजनप्रीता मणिभूषितमण्डना ।
किङ्किणीशब्दसंयुक्ता नृत्यन्ती रक्तलोचना ॥ २०-१८॥

कृशाङ्गी कृसरप्रीता शरासनगतोत्सुका ।
कपालखर्परधरा पञ्चाशन्मुण्डमालिका ॥ २०-१९॥

हव्यकव्यप्रदा तुष्टिः पुष्टिश्चैव वराङ्गना ।
शान्तिः क्षान्तिर्मनो बुद्धिः सर्वबीजस्वरूपिणी ॥ २०-२०॥

उग्रापतारिणी तीर्णा निस्तीर्णगुणवृन्दका ।
रमेशी रमणी रम्या रामानन्दस्वरूपिणी ॥ २०-२१॥

रजनीकरसम्पूर्णा रक्तोत्पलविलोचना ।
इति ते कथितं दिव्यं शतं नाम्नां महेश्वरि ॥ २०-२२॥

प्रपठेद् भक्तिभावेन तारिण्यास्तारणक्षमम् ।
सर्वासुरमहानादस्तूयमानमनुत्तमम् ॥ २०-२३॥

षण्मासाद् महदैश्वर्यं लभते परमेश्वरि ।

भूमिकामेन जप्तव्यं वत्सरात्तां लभेत् प्रिये ॥ २०-२४॥

धनार्थी प्राप्नुयादर्थं मोक्षार्थी मोक्षमाप्नुयात् ।
दारार्थी प्राप्नुयाद् दारान् सर्वागम(पुरो?प्रचो)दितान् ॥ २०-२५॥

अष्टम्यां च शतावृत्त्या प्रपठेद् यदि मानवः ।
सत्यं सिद्ध्यति देवेशि संशयो नास्ति कश्चन ॥ २०-२६॥

इति सत्यं पुनः सत्यं सत्यं सत्यं महेश्वरि ।
अस्मात् परतरं नास्ति स्तोत्रमध्ये न संशयः ॥ २०-२७॥

नाम्नां शतं पठेद् मन्त्रं संजप्य भक्तिभावतः ।
प्रत्यहं प्रपठेद् देवि यदीच्छेत् शुभमात्मनः ॥ २०-२८॥

इदानीं कथयिष्यामि विद्योत्पत्तिं वरानने ।
येन विज्ञानमात्रेण विजयी भुवि जायते ॥ २०-२९॥

योनिबीजत्रिरावृत्त्या मध्यरात्रौ वरानने ।
अभिमन्त्र्य जलं स्निग्धं अष्टोत्तरशतेन च ॥ २०-३०॥

तज्जलं तु पिबेद् देवि षण्मासं जपते यदि ।
सर्वविद्यामयो भूत्वा मोदते पृथिवीतले ॥ २०-३१॥

शक्तिरूपां महादेवीं शृणु हे नगनन्दिनि ।
वैष्णवः शैवमार्गो वा शाक्तो वा गाणपोऽपि वा ॥ २०-३२॥

तथापि शक्तेराधिक्यं शृणु भैरवसुन्दरि ।
सच्चिदानन्दरूपाच्च सकलात् परमेश्वरात् ॥ २०-३३॥

शक्तिरासीत् ततो नादो नादाद् बिन्दुस्ततः परम् ।
अथ बिन्द्वात्मनः कालरूपबिन्दुकलात्मनः ॥ २०-३४॥

जायते च जगत्सर्वं सस्थावरचरात्मकम् ।
श्रोतव्यः स च मन्तव्यो निर्ध्यातव्यः स एव हि ॥ २०-३५॥

साक्षात्कार्यश्च देवेशि आगमैर्विविधैः शिवे ।
श्रोतव्यः श्रुतिवाक्येभ्यो मन्तव्यो मननादिभिः ॥ २०-३६॥

उपपत्तिभिरेवायं ध्यातव्यो गुरुदेशतः ।
तदा स एव सर्वात्मा प्रत्यक्षो भवति क्षणात् ॥ २०-३७॥

तस्मिन् देवेशि प्रत्यक्षे शृणुष्व परमेश्वरि ।
भावैर्बहुविधैर्देवि भावस्तत्रापि नीयते ॥ २०-३८॥

भक्तेभ्यो नानाघासेभ्यो गवि चैको यथा रसः ।
सदुग्धाख्यसंयोगे नानात्वं लभते प्रिये ॥ २०-३९॥

तृणेन जायते देवि रसस्तस्मात् परो रसः ।
तस्मात् दधि ततो हव्यं तस्मादपि रसोदयः ॥ २०-४०॥

स एव कारणं तत्र तत्कार्यं स च लक्ष्यते ।
दृश्यते च महादे(व?वि)न कार्यं न च कारणम् ॥ २०-४१॥

तथैवायं स एवात्मा नानाविग्रहयोनिषु ।
जायते च ततो जातः कालभेदो हि भाव्यते ॥ २०-४२॥

स जातः स मृतो बद्धः स मुक्तः स सुखी पुमान् ।
स वृद्धः स च विद्वांश्च न स्त्री पुमान् नपुंसकः ॥ २०-४३॥

नानाध्याससमायोगादात्मना जायते शिवे ।
एक एव स एवात्मा सर्वरूपः सनातनः ॥ २०-४४॥

अव्यक्तश्च स च व्यक्तः प्रकृत्या ज्ञायते ध्रुवम् ।
तस्मात् प्रकृतियोगेन विना न ज्ञायते क्वचित् ॥ २०-४५॥

विना घटत्वयोगेन न प्रत्यक्षो यथा घटः ।
इतराद् भिद्यमानोऽपि स भेदमुपगच्छति ॥ २०-४६॥

मां विना पुरुषे भेदो न च याति कथञ्चन ।
न प्रयोगैर्न च ज्ञानैर्न श्रुत्या न गुरुक्रमैः ॥ २०-४७॥

न स्नानैस्तर्पणैर्वापि नच दानैः कदाचन ।
प्रकृत्या ज्ञायते ह्यात्मा प्रकृत्या लुप्यते पुमान् ॥ २०-४८॥

प्रकृत्याधिष्ठितं सर्वं प्रकृत्या वञ्चितं जगत् ।
प्रकृत्या भेदमाप्नोति प्रकृत्याभेदमाप्नुयात् ॥ २०-४९॥

नरस्तु प्रकृतिर्नैव न पुमान् परमेश्वरः ।
इति ते कथितं तत्त्वं सर्वसारमनोरमम् ॥ २०-५०॥

इति श्रीबृहन्नीलतन्त्रे भैरवभैरवीसंवादे ताराशतनाम
तत्त्वसारनिरूपणं विंशः पटलः ॥ २०॥